# अग्निसहस्रनामस्तोत्रम्

ॐ श्रीगणेशाय नमः ।
श्रीगुरुः शरणम् ।

श्रीकाञ्चीकामकोटीमठपयतिवरं शङ्करार्यस्वरूपम्
सुज्ञानं सार्वभौमं सकलमतविदां पालकं द्वैतहीनम् ।
काले कल्किप्रभावान्निगमगिरिमधस्तात्पतन्तं वहन्तं
वन्दे कूर्मस्वरूपं हरिमिव सततं चन्द्रमौळिं यतीन्द्रम् ॥

श्रीमन्महादेवयतीश्वराणां
कराब्जजातं सुयमीन्द्रमुख्यम् ।
सर्वज्ञकल्पं विधिविष्णुरूपं
श्रीचन्द्रमौळीन्द्रयतिं नमामि ॥

श्रीशङ्कराचर्यगुरुस्वरूपं
श्रीचन्द्रमौळीन्द्रकराब्जजातम् ।
श्रीकामकोटीन्द्रयतिं वरेण्यं
श्रीमज्जयेन्द्रं शरणं प्रपद्ये ॥

वेदाख्यवृक्षमनिशं परिपालयन्तं
विद्वद्वरेण्यपततां भुवि कल्पवृक्षम् ।
नित्यं हसन्मुखमनोज्ञशशिस्वरूपं
श्रीमज्जयेन्द्रमनिशं शरणं प्रपद्ये ॥

जगद्गुरुभ्यां विबुधार्चिताभ्यां
श्रीचन्द्रमौळीन्द्रजयेन्द्रकाभ्याम् ।
श्रीकामकोटीश्वरशङ्कराभ्यां
नमः सुविद्रक्षणदीक्षिताभ्याम् ॥

॥ इति श्रीगुरुचरणदासः साम्बदीक्षितशर्मा हरितः -
श्रीक्षेत्रगोकर्णम् ॥

श्रीगणेशाय नमः ।

वाङ्मुखम् -
मातरं पितरं नत्वा लक्ष्मीं दामोदरं तथा ॥

पूर्वैः सदेडितं चाग्निं गुरुं गणपतिं विभुम् ॥ १॥

अग्नेर्नामसस्राणां सङ्ग्रहं वेदतो मया ।
उद्धृत्य क्रियते भक्त्या चित्रभानुप्रतुष्टये ॥ २॥

अत्र प्रमाणमृग्वेदे शुनःशेपो वसुश्च तौ ।
यदाहतुर्मन्त्रवर्णैर्मर्ता, अग्नेर्वयम्, इति ॥ ३॥

काण्वोवसुः
मर्ता अम॑र्त्यस्य ते॒ भूरि॒नाम॑ मनामहे ।
विप्रा॑सो जा॒तवे॑दसः ॥

आजीगर्तिः शुनःशेपः -
अ॒ग्नेर्व॒यं प्र॑थ॒मस्या॒मृता॑नां॒ मना॑महे॒ चारु॑दे॒वस्य॒ ना॒म॑ ।
स नो॑ म॒ह्या अदि॑तये॒ मुन॑र्दात् पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑ च ॥

अस्य नाम्नां सहस्रस्य ऋषिः श्रीब्रह्मणस्पतिः ।
सर्वमन्त्रप्रभुः साक्षादग्निरेव हि देवता ॥ ४॥

अनुष्टुप् त्रिष्टुप् शक्वर्यश्छन्दांसि सुमहन्ति च ।
धर्मार्थकाममोक्षार्थं विनियोगो जपादिपु ॥ ५॥

ध्यानं चत्वारि शृङ्गेति वामदेवर्षि दर्शनम् ।
आग्नेयं दैवतं त्रिष्टुप् छन्दो जाप्ये हि युज्यते ॥ ६॥

ॐ चत्वारि॒शृङ्गा॒ त्रयो॑ अस्य॒ पादा॒ द्वे शी॒र्षे स॒प्त हस्ता॑सो अस्य ।
त्रिधा॑ ब्द्धो वृ॑ष॒भो रो॑रवीति म॒हे दे॒वो म॑र्त्या॒आवि॑वेश ॥

ॐ श्रीगणेशाय नमः ।
ॐ श्रीसरस्वत्यै नमः ।

अथाग्निसहस्रनामस्तोत्रम् ।
ॐ अग्निर्वसुपतिर्होता दीदिवी रत्नधातमः ।
आध्रसाचित्पिता जातः शीर्षतः सुक्रतुर्युवा ॥ १॥ var आध्रस्यचित्पिता

भासाकेतुर्बृहत्केतुर्बृहदर्चाः कविक्रतुः
सत्यः सत्ययजो दूतो विश्ववेदा अपस्तमः ॥ २॥

स्वे दमे वर्धमानोऽर्हन्तनूकृन्मृळयत्तमः ।
क्षेमो गुहाचरन्नाभिः पृथिव्याः सप्तमानुषः ॥ ३॥

अद्रेः सूनुर्नराशंसो बर्हिः स्वर्णर ईळितः ।
पावको रेरिहत्क्षामा घृतपृष्ठो वनस्पतिः ॥ ४॥

सुजिह्वो यज्ञनीरुक्षन्सत्यमन्मा सुमद्रथः ।
समुद्रः सुत्यजो मित्रो मियेध्यो नृमणोऽर्यमा ॥ ५॥

पूर्व्यश्चित्ररथः स्पार्हः सुप्रथाः सहसोयहुः ।
यज्वा विमानो रजसा रक्षोहाऽथर्युरध्रिगुः ॥ ६॥

सहन्यो यज्ञियो धूमकेतुर्वाजोऽङ्गिरस्तमः ।
पुरुचन्द्रो वपूरेवदनिमानो विचर्षणिः ॥ ७॥

द्विमाता मेधिरो देवो देवानां शन्तमो वसुः ।
चोदिष्ठो वृषभश्चारूः पुरोगाः पुष्टिवर्धनः ॥ ८॥

रायोधर्ता मन्द्रजिह्वः कल्याणो वसुवित्तमः ।
जामिः पूषा वावशानो व्रतपा अस्तृतोऽन्तरः ॥ ९॥

सम्मिश्लोऽङ्गिरसां ज्येष्ठो गवां त्राता महिव्रतः ।
विशां दूतस्तपुर्मूर्धा स्वध्वरो देववीतमः ॥ १०॥

प्रत्नो धनस्पृदविता तपुर्जम्भो महागयः ।
अरुषोऽतिथिरस्यद्मसद्वा दक्षपतिः सहः ॥ ११॥

तुविष्माञ्छवसासूनुः स्वधावा ज्योतिरप्सुजाः ।
अध्वराणां रथी श्रेष्ठः स्वाहुतो वातचोदितः ॥ १२॥

धर्णसिर्भोजनस्त्राता मधुजिह्वो मनुर्हितः ।
नमस्य ऋग्मियो जीरः प्रचेताः प्रभुराश्रितः ॥ १३॥

रोहिदश्वः सुप्रणीतिः स्वराड्गृत्सः सुदीदितिः ।
दक्षो विवस्वतो दूतो बृहद्भा रयिवान् रयिः ॥ १४॥

अध्वराणां पतिः सम्राड् घृष्विर्दास्वद्विशां प्रियः
घृतस्नुरदितिः स्वर्वाञ्छुत्कर्णो नृतमो यमः ॥ १५॥

अङ्गिराः सहसःसूनुर्वसूनामरतिः क्रतुः ।

सप्तहोता केवलोऽप्यो विभावा मघवा धुनिः ॥ १६॥

समिधानः प्रतरणः पृक्षस्तमसि तस्थिवान् ।
वैश्वानरो दिवोमूर्धा रोदस्योररतिः प्रियः ॥ १७॥

यज्ञानां नाभिरत्रिः सत्सिन्धूनाञ्जामिराहुतः ।
मातरिश्वा वसुधितिर्वेधा ऊर्ध्वस्तवो हितः ॥ १८॥

अश्वी भूर्णिरिनो वामो जनीनां पतिरन्तमः ।
पायुर्मर्तेषु मित्रोऽर्यः श्रुष्टिः साधुरहिरृभुः ॥ १९॥

भद्रोऽजुर्यो हव्यदातिश्चिकित्वान्विश्वशुक्पृणन् ।
शंसः संज्ञातरूपोऽपाङ्गर्भस्तुविश्रवस्तमः ॥ २०॥

गृध्नुः: शूरः सुचन्द्रोऽश्वोऽदब्धो वेधस्तमः शिशुः ।
वाजश्रवा हर्यमाण ईशानो विश्वचर्षणिः ॥ २१॥

पुरुप्रशस्तो वाध्र्यश्वोऽनूनवर्चाः कनिक्रदत् ।
हरिकेशो रथी मर्यः स्वश्वो राजन्तुविष्वणिः ॥ २२॥

तिग्मजम्भः सहस्राक्षस्तिग्मशोचिर्द्रुहन्तरः ।
ककुदुक्थ्यो विशां गोपा मंहिष्ठो भारतो मृगः ॥ २३॥

शतात्मोरुज्रया वीरश्चेकितानो धृतव्रतः ।
तनूरुक् चेतनोऽपूर्व्यो व्यध्वा चक्रिर्धियावसुः ॥ २४॥

श्रितः सिन्धुषु विश्वेष्वनेहा ज्येष्ठश्चनोहितः ।
अदाभ्यश्चोद ऋतुपा अमृक्तः शवसस्पतिः ॥ २५॥

गुहासद्वीरुधां गर्भः सुमेधाः शुष्मिणस्पतिः ।
सुप्रदानुः कवितमः श्चितानो यज्ञसाधनः ॥ २६॥

तुविद्युम्नोऽरुणस्तूपो विश्वविद्रातुवित्तमः ।
श्रुष्टीवाञ्छ्रेणिदन्दाता पृथुपाजाः सहस्कृतः ॥ २७॥

अभिश्रीः सत्यवाक्त्वेषो मात्रोः पुत्रो महिन्तमः ।
घृतयोनिर्दिदृक्षेयो विश्वदेव्यो हिरण्मयः ॥ २८॥ var हिरण्ययः

अनुषत्यः कृष्णजंहाः शतनीथोऽप्रतिष्कुतः ।
इळायाः पुत्र ईळेन्यो विचेता वाघतामुशिक् ॥ २९॥

वीतोऽर्को मानुषोऽजस्रो विप्रः श्रोतोर्विया वृषः
आयोयुवान आबाधो वीळुजम्भो हरिव्रतः ॥ ३०॥

दिवःकेतुर्भुवोमूर्धा सरण्यन्दुर्दभः सुरुक् ।
दिव्येन शोचिषा राजन्सुदीतिरिषिरो बृहत् ॥ ३१॥

सुदृशीको विशाङ्केतुः पुरुहूत उपस्थसद् ।
पुरोयावा पुर्वणीकोऽनिवृतः सत्पतिर्द्युमान् ॥ ३२॥

यज्ञस्य विद्वानव्यथ्यो दुर्वर्तु भूर्जयन्नपात् ।
अमृतः सौभगस्येशः स्वराज्यो देवहूतमः ॥ ३३॥

कीलालपा वीतिहोत्रो घृतनिर्णिक् सनश्रुतः ।
शुचिवर्णस्तुविग्रीवो भारती शोचिषस्पतिः ॥ ३४॥

सोमपृष्ठो हिरिश्मश्रुर्भद्रशोचिर्जुगुर्वणिः ।
ऋत्विक् पूर्वेभिरृषिभिरीड्यश्चित्रश्रवस्तमः ॥ ३५॥

भीमः स्तियानां वृषभो नूतनैरीड्य आसुरः ।
स्तभूयमानोऽध्वराणां गोपा विश्पतिरस्मयुः ॥ ३६॥

ऋतस्य गोपा जीराश्वो जोहूत्रो दम्पतिः कविः ।
ऋतजातो द्युक्षवचा जुह्वास्योऽमीवचातनः ॥ ३७॥

सोमगोपाः शुक्रशोचि र्घृताहवन आयजिः ।
असन्दितः सत्यधर्मा शशमानः शुशुक्वनिः ॥ ३८॥

वातजूतो विश्वरूपस्त्वष्टा चारुतमो महान् ।
इळा सरस्वती हर्षन्तिस्त्रो देव्यो मयोभुवः ॥ ३९॥

अर्वा सुपेशसौ देव्यौ होतारौ स्वर्पतिः सुभाः ।
देवीर्द्वारो जराबोधो हूयमानो विभावसुः ॥ ४०॥

सहसावान् मर्मृजेन्यो हिंस्त्रोऽमृतस्य रक्षिता ।
द्रविणोदा भ्राजमानो धृष्णुरूर्जाम्पतिः पिता ॥ ४१॥

सदायविष्ठो वरुणो वरेण्यो भाजयुः पृथुः ।
वन्द्योध्वराणां सम्राजन् सुशेवो धीरृषिः शिवः ॥ ४२॥

पृथुप्रगामा विश्वायुर्मीढ्वान्यन्ता शुचत् सखा ।
अनवद्यः पप्रथानः स्तवमानो विभुः शयुः ॥ ४३॥

श्वैत्रेयः प्रथमो द्युक्षो बृहदुक्षा सुकृत्तरः ।
वयस्कृदग्नित्तोकस्य त्राता प्रीतो विदुष्टरः ॥ ४४॥

तिग्मानीको होत्रवाहो विगाहः स्वतवान्भृमिः ।
जुजुषाणः सप्तरश्मिरृषिकृत्तुर्वणिः शुचिः ॥ ४५॥

भूरिजन्मा समनगाः प्रशस्तो विश्वतस्पृथुः ।
वाजस्य राजा श्रुत्यस्य राजा विश्वभरा वृषा ॥ ४६॥

सत्यतातिर्जातवेदास्त्वाष्टोऽमर्त्यो वसुश्रवाः ।
सत्यशुष्मो भाऋजीकोऽध्वरश्रीः सप्रथस्तमः ॥ ४७॥

पुरुरूपो बृहद्भानुर्विश्वदेवो मरुत्सखः ।
रुशदूर्मिर्जेहमानो भृगवान् वृत्रहा क्षयः ॥ ४८॥

वामस्यरातिः कृष्टीनां राजा रुद्रः शचीवसुः ।
दक्षैः सुदक्ष इन्धानो विश्वकृष्टिर्बृहस्पतिः ॥ ४९॥

अपांसधस्थो वसुविद्रण्वो भुज्म विशाम्पतिः ।
सहस्रवल्शो धरुणो वह्निः शम्भुः सहन्तमः ॥ ५०॥

अच्छिद्रोतिश्चित्रशोचिर्हृषीवानतिथिर्विशाम् ।
दुर्धरीतुः सपर्येण्यो वेदिषच्चित्र आतनिः ॥ ५१॥

दैव्यःकेतुस्तिग्महेतिः कनीनाञ्जार आनवः ।
ऊर्जाहुतिरृतश्चेत्यः प्रजानन्सर्पिरासुतिः ॥ ५२॥

गुहाचतञ्चित्रमहा द्व्रन्नः सूरो नितोशनः ।
क्रत्वाचेतिष्ठ ऋतचित्त्रिवरूथः सहस्रजित् ॥ ५३॥

सन्दृग्जूर्णिः क्षोदायुरुषर्भुद्वाजसातमः ।

नित्यः सूनुर्जन्य ऋतप्रजातो वृत्रहन्तमः ॥ ५४॥

वर्षिष्ठः स्पृहयद्वर्णो घृणिर्जातो यशस्तमः ।
वनेषु जायुः पुत्रःसन्पिता शुक्रो दुरोणयुः ॥ ५५॥

आशुहेमः क्षयद्वोरो देवानां केतुरह्रयः ।
दुरोकशोचिः पलितः सुवर्चा बहुलोऽद्भुतः ॥ ५६॥

राजा रयीणां निषत्तो धूर्षद्रूक्षो ध्रुवो हरिः ।
धर्मो द्विजन्मा सुतुकः शुशुक्वाञ्जार उक्षितः ॥ ५७॥

नाद्यः सिष्णुर्दधिः सिंह ऊर्ध्वरोचिरनानतः ।
शेवः पितॄनां स्वाद्माऽऽहावोऽप्सु सिंह इव श्रितः ॥ ५८॥

गर्भो वनानाञ्चरथां गर्भो यज्ञः पुरूवसुः ।
क्षपावान्नृपतिर्मेध्यो विश्वः श्वेतोऽपरीवृतः ॥ ५९॥

स्थातां गर्भः शुक्रवर्चास्तस्थिवान् परमे पदे ।
विद्वान्मर्तागुंश्च देवानां जन्म श्येतः शुचिव्रतः ॥ ६०॥

ऋतप्रवीतः सुब्रह्मा सविता चित्तिरप्सुषद् ।
चन्द्रः पुरस्तूर्णितमः स्पन्द्रो देवेषु जागृविः ॥ ६१॥

पुर एता सत्यतर ऋतावा देववाहनः ।
अतन्द्र इन्द्रः ऋतुविच्छोचिष्ठः शुचिदच्छितः ॥ ६२॥

हिरण्यकेशः सुप्रीतो वसूनां जनिताऽसुरः ।
ऋभ्वा सुशर्मा देवावीर्दधद्रत्नानि दाशुषे ॥ ६३॥

पूर्वो दधृग्दिवस्पायुः पोता धीरः सहस्रसाः ।
सुमृळीको देवकामो नवजातो धनञ्जयः ॥ ६४॥

शश्वत्तमो नीलपृष्ठ ऋष्वो मन्द्रतरोऽग्रियः ।
स्वर्चिरंशो दारुरस्रिच्छितिपृष्ठो नमोवहन् ॥ ६५॥

पन्यांसस्तरुणः सम्राट् चर्षणीनां विचक्षणः ।
स्वङ्गः सुवीरः कृष्णाध्वा सुप्रतूर्तिरिळो मही ॥ ६६॥

यविष्ठ्यो दक्षुषवृको वाशीमानवनो घृतम् ।
ईवानस्ता विश्ववाराश्चित्रभानुरपां नपात् ॥ ६७॥

नृचक्षा ऊर्जयञ्च्छीरः सहोजा अद्भुतक्रतुः ।
बहुनामवमोऽभिद्युर्भानुर्मित्रमहो भगः ॥ ६८॥

वृश्चद्वनो रोरुचानः पृथिव्याः पतिराधृषः ।
दिवः सूनुर्दस्मवर्चा यन्तुरो दुष्टरो जयन् ॥ ६९॥

स्वर्विद्रणश्रीरथिरो नाकः शुभ्रोऽसुरः ससः ।
हिरिशिप्रो विश्वमिन्वो भृगूणां रातिरद्वयन् ॥ ७०॥

सुहोता सुरणः सुद्यौर्मन्धाता स्ववसः पुमान् ।
अश्वदावा श्रेष्ठशोचिर्यजीयान्हर्यतोऽर्णवः ॥ ७१॥

सुप्रतीकश्चित्रयामः स्वभिष्टिश्चक्षणीरुशन् ।
बृहत्सूरः पृष्टबन्धुः शचीवान्संयतश्चिकित् ॥ ७२॥

विशामीड्योऽहिंस्यमानो वयोधा गिर्वणास्तपुः ।
वशान्न उग्रोऽद्वयावी त्रिधातुस्तरणिः स्वयुः ॥ ७३॥

त्रययाय्यश्चर्षणीनां होता वीळुः प्रजापतिः ।
गुहमानो निर्मथितः सुदानुरिषितो यजन् ॥ ७४॥

मेधाकारो विप्रवीरः क्षितीनां वृषभोऽरतिः ।
वाजिन्तमः कण्वतमो जरिता मित्रियोऽजरः ॥ ७५॥

रायस्पतिः कूचिदर्थी कृष्णयामो दिविक्षयः ।
घृतप्रतीकश्चेतिष्ठः पुरुक्षुः सत्वनोऽक्षितः ॥ ७६॥

नित्यहोता पूतदक्षः ककुद्मान् क्रव्यवाहनः ।
दिधिषाय्यो दिद्युतानः सुद्योत्मा दस्युहन्तमः ॥ ७७॥

पुरुवारः पुरुतमो जर्हृषाणः पुरोहितः ।
शुचिजिह्वो जर्भुराणो रेजमानस्तनूनपात् ॥ ७८॥

आदितेयो देवतमो दीर्घतन्तुः पुरन्दरः ।
दिवियोनिर्दर्शतश्रीर्जरमाणः पुरुप्रियः ॥ ७९॥

ज्रयसानः पुरुप्रैषो विश्वतूर्तिः पितुष्पिता ।
सहसानः सञ्चिकित्वान् दैवोदासः सहोवृधः ॥ ८०॥

शोचिष्केशो धृषद्वर्णः सुजातः पुरुचेतनः ।
विश्वश्रुष्टिर्विश्ववर्य आयजिष्ठः सदानवः ॥ ८१॥

नेता क्षितीनां दैवीनां विश्वादः पुरुशोभनः ।
यज्ञवन्युर्वह्नितमो रंसुजिह्वो गुहाहितः ॥ ८२॥

त्रिषधस्थो विश्वधाया होत्राविद्विश्वदर्शतः ।
चित्रराधाः सूनृतावान् सद्योजातः परिष्कृतः ॥ ८३॥

चित्रक्षत्रो वृद्धशोचिर्वनिष्टो ब्रह्मणस्पतिः ।
बभ्रिः परस्पा उषसामिधानः सासहिः सदृक् ॥ ८४॥

वाजी प्रशंस्यो मधुपृक् चिकित्रो नक्ष्यः सुदक्षोऽदृपितो वसिष्ठः ।
दिव्यो जुषाणो रघुयत्प्रयज्युः दुर्यः सुराधाः प्रयतोऽप्रमृष्यः ॥ ८५॥

वातोपधूतो महिनादृशेन्यः श्रीणामुदारो धरुणो रयीणाम् ।
दीद्यद्रुरुक्व्वान्द्रविणस्युरत्यः श्रियंवसानः प्रवपन्यजिष्ठः ॥ ८६॥

वस्यो विदानो दिविजः पनिष्ठो दम्यः परिज्मा सुहवो विरूपः ।
जामिर्जनानां विषितो वपुष्यः शुक्रेभिरङ्गैरज आततन्वान् ॥ ८७॥

अध्रुग्वरूथ्यः सुदृशीकरूपः ब्रह्मा विविद्वाञ्चिकितुर्विभानुः । var अद्रुह्वरूथ्यः
धर्णि र्विधर्ता विविचिः स्वनीको यह्वः प्रकेतो वृषणश्वकानः ॥ ८८॥

जुष्टो मनोता प्रमतिर्विहायाः जेन्यो हविष्कृत् पितुमाञ्छविष्ठः ।
मतिः सुपित्र्यः सहसीदृशानः शुचिप्रतीको विषुणो मितद्रुः ॥ ८९॥

दविद्युतद्वाजपतिर्विजावा विश्वस्य नाभिः सनृजःसुवृक्तिः ।
तिग्मः सुदंसा हरितस्तमोहा जेता जनानां ततुरिर्वनर्गुः ॥ ९०॥

प्रेष्ठो धनर्चः सुषखो धियन्धिः मन्युःपयस्वान्महिषः समानः ।
सूर्यो घृणीवान् रथयुर्धृतश्रीः भ्राता शिमीवान्भुवनस्य गर्भः ॥ ९१॥

सहस्ररेता नृषदप्रयुच्छन् वेनो वपवान्सुषुमञ्छिशानः ।

मधुप्रतीकः स्वयशाः सहीयान् नव्यो मुहुर्गीः सुभगो रभस्वान् ॥ ९२॥

यज्ञस्य केतुः सुमनस्यमानः देवः श्रवस्यो वयुनानि विद्वान् ।
दिवस्पृथिव्योररतिर्हविर्वाट् विष्णू रथः सुष्टुत ऋञ्जसानः ॥ ९३॥

विश्वस्य केतुश्च्यवनः सहस्यो हिरण्यरूपः प्रमहाः सुजम्भः ।
रुशद्वसानः कृपनीळ ऋन्धन् कृत्व्यो घृतान्नः पुरुधप्रतीकः ॥ ९४॥

सहस्रमुष्कः सुशमी त्रिमूर्धा मन्द्रः सहस्वानिषयन्तरुत्रः ।
तृषुच्युतश्चन्द्ररथोभुरण्युः धासिः सुवेदः समिधा समिद्धः ॥ ९५॥

हिरण्यवर्णः शमिता सुदत्रः यज्ञस्य नेता सुधितः सुशोकः ।
कविप्रशस्तः प्रथमोऽमृतानां सहस्रशृङ्गो रयिविद्रयीणाम् ॥ ९६॥

ब्रध्नो हृदिस्पृक् प्रदिवोदिविस्पृक् विभ्वा सुबन्धुः सुयजो जरद्विट् ।
अपाकचक्षा मधुहस्त्य इद्धो धर्मस्त्रिपस्त्यो द्रविणा प्रतिव्यः ॥ ९७॥

पुरुष्टुतः कृष्णपविः सुशिप्रः पिशङ्गरूपः पुरुनिष्ठ एकः ।
हिरण्यदन्तः सुमखः सुहव्यो दस्मस्तपिष्ठः सुसमिद्ध इर्यः ॥ ९८॥

सुद्युत् सुयज्ञः सुमना सुरत्नः सुश्रीः सुसंसत् सुरथः सुसन्दृक् ।
तन्वा सुजातो वसुभिः सुजातः सुदृक् सुदेवः सुभरः सुबर्हिः ॥

ऊर्जोनपाद्रयिपतिः सुविदत्र आपिः
अक्रोऽजिरो गृहपतिः पुरुवारपुष्टिः ।
विद्युद्रथः सुसनिता चतुरक्ष इष्टिः
दीद्यान इन्दुरुरुकृद्धृतकेश आशुः ॥ १००॥

॥ इत्यग्निसहस्रनामस्तोत्रं सम्पूर्णम् ॥

अन्तिम वाक् -
नाम्नां सहस्रजापेन प्रीतः श्रीहव्यवाहनः
चतुर्णां पुरुषार्थानां दात भवतु मे प्रभुः ॥ १॥

नात्र नाम्नां पौनरुक्त्यं न चकारादिपूरणम् ।
श्लोकानां शतकेनैव सहस्रं ग्रथितं त्विदम् ॥ २॥

श्लोकाश्चतुरशीतिः स्युरादितस्ता अनुष्टुभः ।

ततः पञ्चदश त्रिष्टुबिन्द्रवज्रोपजातिभिः ॥ ३॥

एकान्त्या शक्करी साहि वसन्ततिलका मता ।
सार्धैकादशकैः श्लोकैर्नाम्नामष्टोत्तरं शतम् ॥ ४॥

सङ्गृहीतानि वेदाब्धेरग्नेरेव महीयसः ।
ओङ्कारमादौ नामानि चतुर्थ्यन्तानि तत्ततः ॥ ५॥

नमोऽन्तानि प्रयोज्यानि विनियोगे मनीषिभिः ।
वैदिकत्त्वाच्च सर्वेषां नाम्नामन्ते प्रदर्शितम् ॥ ६॥

सौकर्याय हि सर्वेषां चतुर्थ्यन्तं मुदे मया ।
नाम्नां विशेषज्ञानार्थं मन्त्राङ्कश्च प्रदर्शितः ॥ ७॥

॥ इति श्रीगोकर्णाभिजनस्य दीक्षितदामोदरसूनोः
साम्बदीक्षितस्य कृतौ अग्निसहस्रनामस्त्रोत्रम् ॥